# THE
# MĪMĀṀSĀNYĀYAPRAKĀS'A
OF
# ĀPADEVA

❧

मीमांसाप्रकरणग्रन्थः ।

आपदेवप्रणीतः

# मीमांसान्यायप्रकाशः ।

टिप्पण्यादिसमलंकृतः ।

❧

वाक्रेइत्युपाह्वगंगाधरभट्टसूनुना महादेवशर्मणा

पूर्वसंस्कृतस्य

चतुर्थं संस्करणम्

श्रीमदिन्दिराकान्तचरणान्तेवासिना

नारायण राम आचार्य "काव्यतीर्थ" इत्यनेन

संशोधितम् ।

मुम्बय्याम्

सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः,

निर्णयसागरमुद्रणयन्त्रालयकृते तत्रैव चाङ्कयित्वा प्रकाशितम् ।

❧

शाकः १८६४, सन १९४३



# प्रस्तावः

### श्री ६ गुरुचरणारविन्दाभ्यां नमः ।

अथैष उपक्रम्यते मुद्रयित्वा प्रकाशयितुं मीमांसान्यायप्रकाशाख्यः पूर्वमीमांसाप्रकरणग्रन्थः ।

पूर्वमीमांसा नाम अभ्युदयनिःश्रेयसोपायप्रतिपादकत्वाभ्यां द्विधाविभक्तस्यात्यन्तदुरूहस्य वेदराशेरभ्युदयप्रतिपादकपूर्वप्रविभागविचारशास्त्रम् । ननु मीमांसकमते विधिना त्वेकवाक्यत्वादित्यादिनोपनिषदामपि पारलौकिकफलहेतुकर्मानुष्ठानौपयिकशरीरातिरिक्तनित्यात्मसद्भावज्ञापकतया धर्मे प्रामाण्योपगमाद्विहितप्रतिषिद्धज्ञानस्यैव मोक्षं प्रति प्रयोजकत्वाच्चोक्तरूपाभ्यां विभागोऽनुपपन्न इति चेत्, अनुवचनपौर्वापर्येण तद्विषयविचारशास्त्रयोरपि पूर्वोत्तरभावव्यवहारो बोध्यः ॥

न च पदतदर्थज्ञानवता वेदार्थः शक्यो विज्ञातुं किं विचारशास्त्रेणेति वाच्यम् । आपाततोऽर्थज्ञानसंभवेऽप्यनुष्ठानोपयोगिनो निर्विचिकित्सज्ञानस्यासंभवात् । दर्शितं चैतत्कात्यायनश्रौतसूत्रभाष्यकृता श्रीकर्काचार्येण द्वितीयाध्यायोपोद्घाते—

"स च विधिनिषेधरूपः शब्दसमूहोऽनेकशाखान्तरावस्थानरूपतया स्वतश्च प्रतिवाक्यमनेकवाक्यार्थप्रतिभानिरुद्धावतारतया महोर्मिमालाकुलार्णव इव दुरवगाहः । तद्यथा क्वचिदग्निहोत्रं जुहोतीत्यादौ धात्वर्थमात्रविधानं तत्राप्यग्निहोत्रशब्दे गुणविध्याशङ्का तथा किं होमः स्वर्गाय उत स्वर्गो होमायेति । एवं सर्वत्र । क्वचित्सोमेन यजेतेतिवद्विशिष्टधात्वर्थविधानम् । अग्निहोत्रं जुहुयात्स्वर्गकाम इति फले विधिः । क्वचिच्च सौर्यादौ विशिष्टं फले विधीयते । दध्ना जुहोतीत्यत्र गुणे विधेर्व्यापारपर्यवसानम् । क्वचिच्च प्राकाशावध्वर्यवे ददातीत्यादिवद्धात्वर्थेनान्यसंबन्धविषयो व्यापारः । तथा क्वचिन्मुख्यार्थवृत्तिता शब्दस्य । क्वचित्सहस्रसंवत्सरादिवद्गुणवृत्त्या शब्दवृत्तिः । विध्यर्थवादसंमोहश्च परस्परतो रूपव्यतिषङ्गात् । शूर्पेण जुहोति तेन ह्यन्नं क्रियते इति विधिसरूपोऽर्थवादः । रात्रीः प्रतितिष्ठन्ति य एता

उपयन्तीत्यर्थवादसरूपं रात्रीणां फले विधानमिति । दिङ्मात्रमिदं दुरवगाहत्वे" इति ॥

अतः परमर्षिणा भगवता जैमिनिना लोकाननुजिघृक्षुणा द्वादशभिरध्यायैर्वेदार्थो विचारितः । येषु क्रमेण प्रमाण-भेद-शेषशेषिभाव-प्रयुक्ति-क्रमाधिकार-सामान्य-विशेषातिदेशोह-निषेध-तन्त्र-प्रसङ्गाख्याः सन्ति विषया निरूपिताः । तदेव तन्त्रमुपजीव्य कुमारिलप्रभृतिभिः पार्थसारथिमिश्रादिभिश्च बहुधा प्रपञ्चितोऽयं विषयः । स चालौकिकतया स्वरूपत एव दुरधिगमोऽपि पुनः पूर्वव्याख्यातृप्रदर्शितयुक्तीर्दूषयद्भिरुत्तरोत्तरग्रन्थकृद्भिरग्रिमविषयस्यापि प्रथमत एवोपन्यासस्य कर्तव्यतापातात्सर्वस्यापि तन्त्रस्य सामान्यतः स्वरूपमविज्ञाय न बुद्धिमतापि सुज्ञानास्ते ग्रन्थाः । अतः सर्वस्यापि तन्त्रस्य सामान्यतः स्वरूपावगमाय मीमांसापारदृश्वना कुशाग्रधिषणेन श्रीमदापदेवेन धर्मप्रमाणचोदनानिरूपणव्याजेन प्रसङ्गात्प्रायो द्वादशाध्याय्याः प्रथमादिषष्ठान्तानां दशमस्य चाध्यायस्यार्थः संक्षेपेण तथा संगृहीतः, यथेमं ग्रन्थमधीत्य शास्त्रदीपिकादिग्रन्थानधीयानस्य मतिर्न प्रतिघातं प्राप्नुयात् ।

अत्र ग्रन्थकृता प्रसङ्गागतं न किंचिदुपेक्षितम् । अत एव प्रकृतमनुसराम इत्युक्त्वा प्रथममुपक्रान्तस्य विषयस्यानुसरणं क्रियासमभिहारेण दृश्यते । अत एव चास्य विषयानुक्रमो नासंकीर्णमुपदर्शयितुं शक्य इति प्रथमनिर्दिष्टस्य प्रासङ्गिकनिरूपणानन्तरमनुवर्तमानस्यापि प्रासङ्गिकनिर्देशानन्तरं पुनर्निर्देशो न कृतः ।

अस्य संशोधनं श्रीक्षेत्रआळंदीस्थश्रीज्ञानराजमठाधिपतिभिर्मुद्रणार्थं निर्णयसागराधिपसात्कृतेषु पुस्तकेषु वर्तमानमेकं प्राचीनं लिखितं पुस्तकं, काश्यां हरिदासगुप्तमुद्रितं, कलिकातानगरे श्रीमहामहोपाध्यायश्रीकृष्णनाथन्यायपञ्चाननभट्टाचार्यैः स्वयं व्याख्याय मुद्रितं, काश्यां शिलाक्षरैर्मुद्रितं चेति चत्वारि पुस्तकान्यवलम्ब्य कृतम् । क्वचिच्च पाठभेदस्थले मूलधृतपाठस्यैव युक्तत्वं प्रदर्शयितुं, क्वचिच्च मूलस्थपदानि विवरीतुं च टिप्पणी कृता । तदनेन व्यापारेणाध्येतॄणामुपकारो भूयादित्याशास्ते—

| | |
|---|---|
| शालीवाहनशाकः १८३३ | वार्के इत्युपाह्वो गङ्गाधरभट्टसूनुः |
| भाद्रपदमासः । | **महादेवशर्मा ।** |

# मीमांसान्यायप्रकाशस्य विषयानुक्रमणिका.

समाप्ता न्यायप्रकाशविषयानुक्रमणिका ।

आपदेवकृतः

# मीमांसान्यायप्रकाशः ।

## ( आपदेवी )

श्रीगणेशाय नमः ।

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम् । ५
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम् ॥ १ ॥
अनन्तगुणसंपन्नमनन्तभजनप्रियम् ।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम् ॥ २ ॥

इह खलु परमकारुणिकेन भगवता जैमिन्यृषिणा 'अथातो धर्मजिज्ञासा' इत्यादिना द्वादशस्वध्यायेषु धर्मो विचारितः । तत्र १० वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः । यथा यागादिः । स हि 'यजेत स्वर्गकाम' इत्यादिवाक्येन स्वर्गमुद्दिश्य विधीयते । तथा हि—यजेतेत्यत्रास्त्यंशद्वयम्, यजिधातुः प्रत्ययश्च । तत्र प्रत्ययेऽप्यस्त्यंशद्वयम्, आख्यातत्वं लिङ्त्वं च । आख्यातत्वं च दशसु लकारेषु विद्यते । लिङ्त्वं पुनः केवलं लिङ्येव । तत्रा- १५ ख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते । भावना नाम भवितुर्भवनानुकूलो भावकव्यापारविशेषः । सा च द्विविधा,—शाब्दी भावना आर्थी भावना चेति ।

तत्र पुरुषप्रवृत्त्यनुकूल[1]भावकव्यापारविशेषः शाब्दी भावना । सा च लिङ्त्वांशेनोच्यते, लिङ्श्रवणे 'अयं मां प्रवर्तयति, मत्प्र- २० वृत्त्यनुकूलव्यापारवानयम्' इति नियमेन प्रतीयमानत्वात् । यच्च यस्मात्प्रतीयते तत्तस्य वाच्यम्, यथा गोशब्दस्य गोत्वम् । स च प्रवृत्त्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठोऽभिप्रायविशेषः, वेदे तु पुरुषाभावाल्लिङादिशब्दनिष्ठ एव । न हि वेदः पुरुषनिर्मितः ।

---

१ °लो व्या°.

'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा' ॥

इत्यादिना वेदापौरुषेयत्वस्य साधितत्वात् । 'यः कल्पः स कल्पपूर्वः' इति न्यायेन संसारस्यानादित्वादीश्वरस्य च सर्वज्ञत्वा-
५ दीश्वरो गतकल्पीयं वेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्येतावतै-
वोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च । ततश्च पुरुषाभावाच्छब्दनिष्ठैव सा । अत एव शाब्दी भावनेति व्यपदिशन्ति ।

सा च शाब्दी भावनांऽशत्रयमपेक्षते, साध्यं साधनमिति-
१० कर्तव्यतां चेति । तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेताऽऽर्थी भावना साध्यत्वेन संबध्यते, एकप्रत्ययगम्यत्वेन* समानाभिधानश्रुतेः । यद्यपि †संख्यादीनामप्येकप्रत्ययगम्यत्वं समानं तथाप्य‡योग्यत्वान्न तेषां भाव्यत्वेनान्वयः ।

करणाकाङ्क्षायां लिङादिज्ञानं करणत्वेन संबध्यते । तस्य च
१५ करणत्वं न भावनोत्पादकत्वेन, सन्निकर्षस्येव रूपादिज्ञाने, सन्निकर्षात्प्राक् रूपज्ञानस्येव लिङादिज्ञानात्प्राक् शब्दधर्मभावनाया अभावप्रसङ्गात्, किंतु भावनाभाव्यनिर्वर्तकत्वेनैव । लिङादिज्ञानं हि शब्दभावनाभाव्यार्थी[1]भावनां निर्वर्तयति, कुठार इव च्छेदनम् । अतो लिङादिज्ञानस्य करणत्वेनान्वयः ।

२० इतिकर्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्तव्यतात्वेन संबध्यते । तच्च प्राशस्त्यज्ञानं 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादैर्जन्यते । ते ह्यर्थवादाः स्वार्थप्रतिपादने प्रयोजनमल[2]भमाना लक्षणया क्रतोः प्राशस्त्यं प्रतिपादयन्ति । स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात् । न चेष्टापत्तिः, अध्ययनविध्युपात्तत्वेनानर्थक्यानुपपत्तेः ।

---

* विभिन्नशक्ततावच्छेदकनानाशक्तिनिरूपकं पदं समानाभिधानश्रुतिः । प्रकृते प्रत्ययस्य लिङ्त्वाख्यातत्वाभ्यां क्रमेण शाब्दभावनार्थभावनोपस्थापकत्वात्तथात्वं बोध्यम् । †आदिपदाद्वर्तमानत्वादेर्ग्रहणम् । ‡लिङ्ज्ञानादिनानुत्पाद्यत्वात् ।

---

१ °र्थभा°. २ °मनुपल°.

तथा हि—'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिः सकलस्य वेदस्याध्ययनकर्तव्यतां बोधयन् सर्वो वेदः प्रयोजनवदर्थपर्यवसायीति सूचयति, निरर्थकस्याध्ययनानुपपत्तेः ।

स च वेदो विधिमन्त्रनामधेयनिषेधार्थवादात्मकः । तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान् । स चाप्राप्तमर्थं विधत्ते । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते, 'अग्निहोत्रहोमेन स्वर्गं भावयेत्' इति । ५

यत्र तु कर्म प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्र[1]विधानम् । यथा 'दध्ना जुहुयात्' इत्यत्र होमस्य 'अग्निहोत्रं जुहुयात्' इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम्, 'दध्ना होमं भावयेत्' इति । १०

यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते । तदुक्तम्—'न चेदन्येन शिष्टाः' (जै० सू० १।४।९) इति, शिष्टा उपदिष्टा इत्यर्थः । यथा 'सोमेन यजेत' इत्यत्र सोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानम्, 'सोमवता यागेनेष्टं भावयेत्' इति । न चोभयविधाने वाक्यभेदः, विशिष्टस्यै[2]कत्वात् । विशिष्टविधौ च मत्वर्थलक्षणा । १५ यथा सोमपदेन मत्वर्थो लक्ष्यते सोमवतेति । न हि मत्वर्थलक्षणां विना सोमस्यान्वयः संभवति । ([3]न तावत्सामानाधिकरण्येनान्वयः, तथा सति प्रत्यक्षविरोधापत्तेः । न हि सोमो यागो भवितुमर्हति ।) यदि तावत्सोमयागयोरैक्यरूपेण भावनायां कर[4]णत्वेनैवान्वयः 'सोमेन यागेनेष्टं भावयेत्' इति, तत उभयविधाने वाक्यभेदः । सोमस्य यागवत्फलभावनाकरणत्वे[5]न प्राधान्यापातश्च, यागार्थत्वानुपपत्तिश्च, यागे द्रव्यानुपपत्तिश्च, प्रत्ययवाच्य[6]भावनायाः समानपदोपात्तेन यागेन करणाकाङ्क्षाया निवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनान्वयानुपपत्तिश्च स्यात् । २०

यदि च वैयधिकरण्येनान्वयः, तत्र न तावत् 'यागेन सोमम्' इत्यन्वयः, समानपदोपात्तत्वात्प्रत्ययवाच्यफलभावनायां करणत्वे- २५

---

१ °त्रं विधत्ते. २ °कार्थकत्वात्. ३ ( ) चिह्नितपाठः पुण्यपत्तनमुद्रितपुस्तकेऽधिकः । ४ °त्वेनान्व°. ५ °त्वेन प्रत्यक्षविरोधश्च । नहि सोमो यागो भवितुमर्हति प्राधा°. ६ °फलभा°.

नान्वितस्य यागस्य सोमकर्मकभावनान्वयानुपपत्तेः, यागस्य सोमार्थत्वापत्तेश्च[1]। न चेष्टापत्तिः, अदृष्टद्वयापत्तेः। न हि यागस्य सोमार्थत्वं दृष्टद्वारेण संभवति, व्रीहिष्ववघातेनेव यागेन सोमे कस्यचिद् दृष्टस्याजननात्[2]। अतस्तेन तावत्सोमे किञ्चिददृष्टं जन-
५ नीयम्, प्रोक्षणेनेव व्रीहिषु।

तथा यागस्य सोमार्थत्वे फलभावनायां सोमस्य करणत्वेना-न्वयो वक्तव्यः। भावनाकरणत्वं च भावनाभाव्यनिर्वर्तकत्वेनेत्युक्तम्। न च सोमोऽदृष्टमन्तरेण फलं जनयितुं समर्थः, 'ग्रहैर्जुहोति' इति वाक्यविहितहोमेन तस्य भस्मीभावात्। अतोऽदृष्टद्वयापातान्न
१० यागस्य सोमार्थत्वमिति न 'यागेन सोमं भावयेत्' इत्यन्वयः संभवति, करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च।

अथ 'सोमेन यागं भावयेत्' इत्यन्वयः, तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वाद्यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं लभ्यते इति नादृष्टद्वयापत्तिः, नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वा-
१५ न्वयानुपपत्तिः। करणत्वेनैवान्वयात्। तथाऽप्यप्राप्तत्वाद्भावना-करणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव।

ननु यजेतेत्यत्र यागस्य न करणत्वेन नापि साध्यत्वेनोपस्थितिः। तद्वाचकतृतीयाद्यभावात्, किंतु भावनायां यागसंबन्धमात्रं प्रतीयते। यागस्य च भावनासंबन्धः करणत्वेन साध्यत्वेन च संभवति।
२० तत्र करणत्वांशमादाय फलसंबन्धः। साध्यत्वांशमादाय गुणसंबन्धश्च स्यात्, इति चेत्—मैवम्। यद्यपि भावनया यागस्य संबन्धमात्रं प्रतीयते तथाऽपि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोपस्थितिः संभवति, विरोधात् (विरुद्धत्रिकद्वयापत्तेश्च।)[3] तदवश्यं 'यागेन स्वर्गं भावयेत्' इति करणत्वेनान्वये सति पश्चात् 'सोमेन
२५ यागं भावयेत्' इति साध्यत्वेनान्वयो वक्तव्यः। ततश्च वाक्यभेदः। न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेतीति

---

१ °पातश्च. २ कस्यचिददृष्टस्य. ३ चिह्नितो भागः काशी-पुण्यपत्तन-मुद्रितपुस्तकयोर्दृश्यते.

वक्तुं युक्तम्, कारकाणामेव क्रियान्वयात् । तत्सिद्धं सोमस्य न[1] यागे सामानाधिकरण्येन वैयधिकरण्येन वाऽन्वयः संभवतीति ।

ननु यजेतेत्यत्र प्रत्ययाभिहितभावनायाः करणाकाङ्क्षायां यथा यागः करणत्वेनान्वेति तथेतिकर्तव्यताकाङ्क्षायां सोमस्येतिकर्तव्यतात्वेन भावनायामेवान्वयोऽस्तु, क्रृतं[2] मत्वर्थलक्षणया इति चेत्— ५ न । सोमेनेति तृतीयया करणत्ववाचिन्या सोमस्येतिकर्तव्यतात्वानभिधानात् । तत्र यदीतिकर्तव्यतात्वं लक्षणयोच्यते ततो वरं सोमपद एव प्रकृतिभूते मत्वर्थलक्षणा । '*गुणे त्वन्याय्यकल्पना' ( जै० सू० १।३।१५ ) इति न्यायात् । अथ 'वेदो वा प्रायदर्शनात्' ( जै० सू० ३।३।२ ) इत्यधिकरणोक्तासंजातविरोधित्वन्यायेनान्त्ये १० प्रत्यय एव लक्षणेति चेत्, तथापि सोमस्येतिकर्तव्यतात्वेनान्वयानुपपत्तिः । सिद्धस्य वस्तुन इतिकर्तव्यतात्वाभावात्, क्रियाया एवेतिकर्तव्यतात्वात्, द्रव्यस्य केवलमङ्गत्वात् । अत एवेतिकर्तव्यतात्वाभावात् द्रव्यस्य प्रकरणादग्रहणम् । यथाहुः—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । १५
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥

( त० वा० १।४।३ ) इति ।

तदेतदग्रे वक्ष्यामः । किंच सोमेन यजेतेति हि यागस्योत्पत्तिवाक्यं नाधिकारवाक्यम् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्याधिकारवाक्यत्वात् । उत्पत्तिवाक्ये च नेतिकर्तव्यताकाङ्क्षा, २० इष्टविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्तव्यताकाङ्क्षाया विस्पष्टमनुत्थानात् । तत्सिद्धं सोमस्य नेतिकर्तव्यतात्वेन भावनायामन्वयः । तस्माद्विशिष्टविधावन्वयानुपपत्त्याऽवश्यं मत्वर्थलक्षणा वाच्येति ।

नन्वेवमपि सोमेन यजेतेत्यत्र न विशिष्टविधानम्, गौरवात्,

---

* गुणो नाम विशेषणम् । अन्याय्यं लक्षणा । प्रकृत्यर्थस्य प्रत्ययार्थविशेषणत्वेन भाननियमात्प्रकृतावेव लक्षणोचिता । न विशेष्यसमर्पके प्रत्यये इति भावः ।

---

[1] न सा°. [2] किं म°.

मत्वर्थलक्षणापाताच्च। किंतु दध्ना जुहोतीतिवद्गुणमात्रविधानमस्तु, विधिशक्तेर्गुणे[1] संक्रमात्। यथाहुः—

सर्वत्राख्यातसंबद्धे[2] श्रूयमाणे पदान्तरे।
विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता॥

५ (त० वा० १।४।३) इति।

न च यागस्याप्राप्तत्वान्न तदुद्देशेन सोमविधानमिति वाच्यम्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन यागस्य प्राप्तत्वात्। न चास्याधिकारविधित्वेन नोत्पत्तिविधित्वमिति वाच्यम्। 'उद्भिदा यजेत पशुकामः' इतिवदेकस्यैवोभयविधित्वोपपत्तेः[3]। १० एवं च सोमेन यजेतेत्यत्र न मत्वर्थलक्षणा। यदि ह्यत्र विशिष्टविधानं स्यात्तदान्वयानुपपत्त्या मत्वर्थलक्षणा स्यात्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र तु यागविधाने क्वचिन्न मत्वर्थलक्षणा। न तावदेतस्मिन् वाक्ये, ज्योतिष्टोमेन यागेन स्वर्गं[4] भावयेदिति सामानाधिकरण्येनैव नामपदस्यान्वयात्। नापि सोमेन १५ यजेतेत्यत्र। यागोद्देशेन सोमविधानात्, सोमेन यागं भावयेदिति।

नन्वनुवादेऽप्यस्ति मत्वर्थलक्षणा। अत एवोक्तम्—

विधाने वानुवादे वा यागः करणमिष्यते।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति॥

(त० वा० १।४।२) इति।

२० अतश्च विशिष्टविधाविव गुणविधावप्यस्त्येव मत्वर्थलक्षणेति चेत्,—मैवम्। गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणाऽङ्गीक्रियते। यदा तु भावनायां धात्वर्थस्य करणत्वेनान्वयस्तदान्वयानुपपत्त्या साङ्गीकर्तव्या। गुणविधौ च न धात्वर्थस्य करणत्वेनान्वयो मानाभावात्। न हि दध्ना जुहोतीत्यत्र होमस्य करणत्वं श्रूयते, तद्वाचक- २५ तृतीयाद्यभावात्। कल्प्यते इति चेन्न। गुणस्यैव तत्र विधित्सितत्वेन साध्याकाङ्क्षायां साध्यत्वकल्पनाया एवोचितत्वात्। दध्ना होमं

१ °णे उपसं°. २ °बन्धे. ३ °त्वेनोप°. ४ °स्यात्र विधि°.

भावयेदिति । न चायमस्ति नियमो भावनायां धात्वर्थस्य करणत्वेनैवान्वयो न प्रकारान्तरेणेति, षष्ठाद्यपूर्वपक्षानुत्थानापत्तेः ।

षष्ठाद्ये हि 'यजेत स्वर्गकाम' इत्यादौ प्रत्ययवाच्यायां वक्ष्यमाणार्थभावनायां समानपदश्रुत्या यागस्य भाव्यत्वमाशङ्क्यापुरुषार्थत्वेन परिहृतम् । यदि च धात्वर्थस्य करणत्वेनैव भावनायामन्वयस्तदा ५ भाव्यत्वशङ्कैव नोदेतीति व्यर्थं षष्ठाद्यमधिकरणमापद्येत ।

किंच वाजपेयाधिकरणे ( जै० १।४।६ ) *तन्त्रसंबन्ध आशङ्क्य परिहृतः । धात्वर्थस्य करणत्वेनैवान्वये तन्त्रसंबन्धशङ्कैव न स्यात् । तन्त्रसंबन्धशङ्कापरिहारौ च व्याख्यातौ ।

किंच धात्वर्थस्य न करणत्वेनैवान्वयः । गुणकामाधिकरणे १० ( जै० २।२।२५ ) आश्रयत्वेन धात्वर्थान्वयस्योक्तत्वात् । तथा हि— 'दध्नेन्द्रियकामस्य जुहुयात्' ( तै० ब्रा० २।१।५।६, आ० श्रौ० ६।१५।१ ) इत्यत्र न तावद्धोमो विधीयते, तस्य वचनान्तरेण विहितत्वात् । नापि होमस्य फलसंबन्धः, गुणपदा[1]नर्थक्यापत्तेः । नापि गुणसंबन्धं विधत्ते, फलपदानर्थक्यापातात् । नाप्युभयसंबन्धं विधत्ते, १५ प्राप्ते कर्मण्यनेकविधाने वाक्यभेदापत्तेः । यथाहुः—

> प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
> अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥
>
> ( त० वा० २।२।६ ) इति ।

अत्र च कर्मपदवत् गुणे[2]त्युपलक्षणम् । एकोद्देशेनानेकविधाने २० वाक्यभेदात् ।

अत एव ग्रहैकत्वाधिकरणे ( जै० ३।१।१२ अ० ७ ) ग्रहं संमार्ष्टीत्यत्र ग्रहोद्देशेन एकत्वसंमार्गविधौ वाक्यभेदाद् ग्रहैकत्वमविवक्षितमित्युक्तम् ।

---

* सकृदुच्चरितस्योभयत्र संबन्धस्तन्त्रसंबन्धः । 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र सकृच्छ्रुतस्य धातोः फलभावनायां करणत्वेन वाजपेयरूपगुणभावनायामुद्देश्यत्वेन चान्वय आशङ्कितः ।

---

१ °दार्थस्या°. २ गुणोऽप्यु°.

रेवत्यधिकरणे (जै० २।२।२७ अ० १२) च 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' (ता० ब्रा० १७।७।१) इत्यत्र वारवन्तीयस्य रेवतीसंबन्धे अग्निष्टोमसामसंबन्धे फलसंबन्धे च विधीयमाने वाक्यभेदाद्भावनो-
५पसर्जनं भावनान्तरं विधीयते इत्युक्तम्। तस्मात्प्राप्ते होमे नोभयविधानं संभवति, नापि होमान्तरं विधीयते, गौरवात्, प्रकृतहाना[1]-प्रकृतकल्पनाप्रसङ्गात्, मत्वर्थलक्षणाप्रसङ्गाच्च।

नापि दध्येव केवलं करणत्वेन विधीयते इति युक्तम्। केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः, कर्तृव्यापारव्याप्यत्वनियमा-
१०त्करणत्वस्य। किं तर्हि विधीयते इति चेत् दध्नेति तृतीययोपात्तं दधिकरणत्वं फलभावनायां करणत्वेन विधीयते, प्रत्ययार्थत्वेन दध्नोऽपि तस्य प्राधान्यात्। एवं च दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः। करणत्वं च किंप्रतियोगिकमित्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेन संबध्यते। ततश्च सिद्धो धात्वर्थस्याश्रयत्वेनान्वयः।

१५ प्रकृतमनुसरामः। तत्सिद्धं धात्वर्थस्य न करणत्वेनैवान्वय इति। किं तर्हि क्वचित्करणत्वेन क्वचित्साध्यत्वेन क्वचिदाश्रयत्वेनेति। गुणविधौ साध्यत्वेनैवान्वयः संभवतीति न मत्वर्थलक्षणायाः प्रयोजनम्। किंच गुणविधौ मत्वर्थलक्षणायां गुणस्य धात्वर्थाङ्गत्वे किं मानमिति वक्तव्यम्। न तावच्छ्रुतिः।
२०मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थस्यैवाङ्गत्वे मानं स्यात्, न गुणस्याङ्गत्वेऽपि। समभिव्याहारात्मकं वाक्यमिति चेत्तत्किं स्वतन्त्रमेव मानमुत लिङ्गश्रुती कल्पयित्वा? नाद्यः, बलाबलाधिकरण- (जै० ३।३।१४)विरोधात्। तत्र हि वाक्यं लिङ्गश्रुती कल्पयित्वाऽङ्गत्वे मानमित्युक्तम्। द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तर-
२५कल्पने तस्या एव वा आवृत्तिकल्पने व्यर्थः प्रयासः समाश्रितः स्यात्। विशिष्टविधौ चागत्या तदाश्रयणम्।

किंच भवतु श्रुत्यन्तरकल्पनम्। तथापि तत्सहकृतः प्रत्यक्ष

१ °हानप्रसं°.

एव विधिर्धात्वर्थाङ्गत्वेन गुणं विधत्ते, उत कल्पितं विध्यन्तरम्? क्लृप्तमिति चेन्न, श्रुतविधेर्व्यर्थतापत्तेः । न हि तेन तदा गुणो विधीयते, कल्पितविध्यन्तराङ्गीकारात् । नापि धात्वर्थः, तस्य वचनान्तरेण विहितत्वात् ।

अथ श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थाङ्गत्वेन ५ गुणं विधत्ते इति चेत् तर्हि तत्र कथं धात्वर्थस्यान्वयः? करणत्वेनेति चेन्न, अन्वयानुपपत्तेः । न हि संभवति दध्ना होमेनेति चान्वयः । साध्यत्वेनैवान्वयः—दध्ना होमं भावयेदिति चेत्—न । तथा सत्यनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतदुपेक्षितं स्यात् । विवक्षितवाक्यार्थश्च विनैव मत्वर्थलक्षणयाङ्गीकृतः स्यात् । १० तस्मान्न गुणविधौ मत्वर्थलक्षणा ।

यत्तु 'विधाने वानुवादे वा' इति वार्तिकं, तत्प्रतीतिमवलम्ब्य, न वस्तुगतिम् । तथा हि—यावद्धि अग्निहोत्रं जुहुयादिति वाक्यं नालोच्यते, केवलं दध्ना जुहोतीति वाक्यमालोच्यते, तदा षष्ठाद्यन्यायेन होमस्याभाव्यतां जानतां प्रतिपदाधिकरणभावार्थाधि- १५ करणवासनावासितान्तःकरणानां[1] भवत्येतादृशी मतिः, यद्दधिमता होमेनेष्टं भावयेदिति । प्रतिपदाधिकरणे (जै० २।१।१) हि सोमेन यजेतेत्यादिषु किं गुणधात्वर्थयोः फलभावनाकरणत्वेनान्वयः, उत एकस्यैवेति संदिह्य प्रधानसंबन्धलाभात्, विनिगमनाविरहाच्च सर्वेषां फलभावनाकरणत्वेनान्वयमाशङ्क्य लाघवादे- २० कस्यैव फलभावनाकरणत्वमित्युक्तम् । भावनाकरणत्वं हि भावनाभाव्यनिर्वर्तकतया, भाव्यं च[2] स्वर्गादि नादृष्टमन्तरेणेति अनेकेषां करणत्वे[3]ऽनेकादृष्टकल्पनाप्रसङ्गात् । तस्मादेकस्यैव करणत्वम् ।

यदाप्येकस्य तदापि किं द्रव्यगुणयोः फलभावनाकरणत्वम्, उत धात्वर्थस्येति भावार्थाधिकरणे (जै० २।१।१) संदिह्य द्रव्यगुण- २५ योरेव भावनाकरणत्वम्, 'भूतं भव्यायोपदिश्यते', इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वम्, पदश्रुतेर्बलीय-

---

१ °तानां. २ हि. ३ °त्वेनाने°.

स्त्वादित्युक्तम् । अतश्च सिद्धमेतद्वाक्यान्तरानालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशङ्कायां गुणपदे मत्वर्थलक्षणेति ।

यदा त्वग्निहोत्रं जुहोतीति होमविधायकं वाक्यान्तरमालोच्यते तदा होमस्य वाक्यान्तरेणैव विहितत्वात्तदुद्देशेन गुणमात्रं विधीयते इत्यालोचनान्न मत्वर्थलक्षणेति । अत एवोक्तं पार्थसारथिमिश्रैराघाराग्निहोत्राधिकरणे (जै० २।२।१३) 'फलतो गुणविधिरयं न प्रतीतितः' (शा० दी० २।२ अ० ५) इति ।

यद्वा, एतद्वार्तिकमधिकारविध्यभिप्रायम् । 'उद्भिदा यजेत' (ता० ब्रा० १९।७।२) इत्यादीनामधिकारात् । तत्र हि यागो विधीयताम्, उत्पत्तिवाक्यसिद्धो वानूद्यताम्, उभयथापि धात्वर्थस्य करणत्वेनान्वयात् तृतीयान्तस्य तद्वाचित्वम् । अन्यथान्वयानुपपत्तेरिति[1] । तस्माद् गुणविधौ विनापि लक्षणामन्वयोपपत्तेर्न मत्वर्थलक्षणेति । अतश्च सोमेन यजेतेत्यत्र न विशिष्टविधानम्, किंतु गुणमात्रविधानम्, यागस्तु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्मिन्वाक्ये विधीयते इत्येव युक्तम् । अन्यथा मत्वर्थलक्षणापत्तेरिति ।

अत्रोच्यते—यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा, तथापि यागस्याप्राप्तत्वात्सोमेन यजेतेत्यत्र न यागोद्देशेन सोमविधानं संभवति । न च 'ज्योतिष्टोमेने'त्यादिना यागस्य प्राप्तत्वात्तदुद्देशेन गुणमात्रं विधीयत इति वाच्यम् । तस्याधिकारविधित्वेनोत्पत्तिविधित्वानुपपत्तेः । कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । तेन च विहितस्य कर्मणः फलविशेषसंबन्धमात्रमधिकारविधिना क्रियते । फलविशेषसंबन्धबोधकस्याधिकारविधित्वात् । यथा आग्नेयोऽष्टाकपालो भवतीत्येतद्विहितस्य कर्मणः फलविशेषसंबन्धमात्रं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं विधत्ते इति तस्याधिकारविधित्वं, नोत्पत्तिविधित्वम् ।

स्यादेतत् । दर्शपूर्णमासाभ्यामित्येतस्य नोत्पत्तिविधित्वं संभ-

---

१ °त्तिरि°.

वति, आग्नेयोऽष्टाकपाल इत्यादिवाक्यानर्थक्यापत्तेः। न हि तदा तेन कर्म विधीयते, तस्य दर्शपूर्णमासाभ्यामित्यनेन विहितत्वात् । नापि गुणविधानं संभवति, प्राप्ते कर्मणि अनेकगुणविधाने वाक्यभेदापत्तेः । अतः आग्नेयोऽष्टाकपाल इत्यस्योत्पत्तिविधित्वं दर्शपूर्णमासाभ्यामित्यस्य चाधिकारविधित्वं युक्तम् । ज्योतिष्टोमेनेत्यस्य तु अधि- ५ कारविधेरुद्भिदा यजेत पशुकाम इत्यादिवदुत्पत्तिविधित्वेऽपि स्वीक्रियमाणे न कस्यचिदानर्थक्यम् । सोमेन यजेतेत्यस्य गुणविधित्वाद्यागोद्देशेन सोममात्रविधानाच्च न वाक्यभेद इति चेत्—नैवम् । यद्यपि सोमेन यजेतेत्यत्र न वाक्यभेदः, तथापि ज्योतिष्टोमेनेत्यस्मिन्वाक्ये कर्मस्वरूपे तस्य च फलसंबन्धे विधीयमाने गौरव- १० लक्षणो वाक्यभेदोऽस्त्येव । सोमेन यजेतेत्येतद्वाक्यविहितकर्मणः फलसंबन्धमात्रविधाने त[1]दभावात् । उद्भिदा यजेतेत्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणम् ।

न च सोमेन यजेतेत्यत्रापि कर्मणः स्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम् । श्रूयमाणेन विधिना गुण- १५ स्या[2]विधेयत्वात्, विशेषणविधेरार्थिकत्वात् । सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः । ज्योतिष्टोमेनेत्यस्य तूत्पत्तिविधित्वे कर्मस्वरूपं फलसंबन्धश्चेति उभयं श्रूयमाणेनैव विधिना विधातव्यमिति दृढो गौरवलक्षणो वाक्यभेदः । यथाहुः—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् । २०
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥
(त० वा० २।३।३) इति ।

न च सोमेन यजेतेत्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदः तथापि मत्वर्थलक्षणा स्यादेवेति वाच्यम् । तस्याः स्वीक्रियमाणत्वात्, लक्षणातो वाक्यभेदस्य जघन्यत्वात् । लक्षणा हि पद- २५ दोषः, वाक्यभेदस्तु वाक्यदोषः । पदवाक्य[3]दोषयोर्मध्ये पदे एव

---

१ लाघवात्. २ °स्याविहितत्वात्. ३ °क्ययोर्म°.

दोषकल्पनाया उचितत्वात् । 'गुणे त्वन्याय्यकल्पना' (जै० सू० १।३।१५) इति न्यायात् ।

अत एव 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात्पदद्वयेनावस्थाविशेषो लक्ष्यते इत्युक्तम् । तस्माद्वाक्यभेदप्रसक्तौ लक्षणैव स्वीकार्या । तस्मात् सोमेन यजेतेत्ययमेवोत्पत्तिविधिर्न ज्योतिष्टोमेनेत्ययं, गौरवलक्षणवाक्यभेदापत्तेः ।

किंच सोमेन यजेतेत्यत्र यागविधाने श्रुत्यर्थविधानं गुणविधाने तु वाक्यार्थविधानम् । तच्च श्रुत्यर्थविधाने[1]संभवेऽयुक्तम् । यथाहुः—

वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे ।

(आप० श्रौ० १२।१४।८) (मान० श्रौ० २।३।५।४) (कात्या० श्रौ० ९।६।६) इति ।

वाक्यार्थः, पदान्तरार्थ इत्यर्थः । ज्योतिष्टोमेनेत्यत्रापि फलोद्देशेन यागस्यैव विधानान्न वाक्यार्थविधानम्, तदुत्पत्तिविधित्ववादिनापि तदङ्गीकाराच्च । तस्मात् ज्योतिष्टोमेनेत्ययमधिकारविधिरेव ।

अपि च कर्मस्वरूपविधिस्तत्र स्वीकार्यो यत्र कर्मणो रूपमुपलभ्यते । यागस्य च द्वे रूपे,—द्रव्यं देवता चेति । सोमेन यजेतेत्यत्र यद्यपि देवता नोपलभ्यते सोमयागस्याव्यक्तत्वात्, अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्यम्, न तु देवताराहित्यमात्रम्, ऐन्द्रवायवं गृह्णातीत्यादिवाक्यविहितग्रहदेवतानां सत्त्वात्, ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागोपकारस्य क्रियमाणत्वात्, तथापि द्रव्यमुपलभ्यत एव । तेनापि यागस्वरूपं ज्ञातुं शक्यमेव । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र न द्रव्यं देवता वा श्रूयते । अतस्तस्योत्पत्तिविधित्वे यागविशेषज्ञानं यागसामान्यस्या[2]विधेयत्वात्

---

१ °ने संभवत्ययु°. २ °स्याविहितत्वात्.

विशेषस्यैव विधेयत्वा[1]दित्यादिक्लेशेन स्यात्, अतो नायं कर्मोत्पत्ति-विधिः ।

नन्वेवमपि अग्निहोत्रं जुहोतीत्ययमपि होमोत्पत्तिविधिर्न स्यात्, रूपाश्रवणात् । तच्छ्रवणाच्च दध्ना जुहोतीत्ययमेवोत्पत्तिविधिः स्यात् । तथा चाघारा[2]ग्निहोत्राधिकरण( जै० २।२। अ० ५ )विरोधः । ५
तत्र हि अग्निहोत्रं जुहोतीत्यस्योत्पत्तिविधित्वं दध्ना जुहोती[3]त्यादीनां च गुणविधित्वमुक्तमिति चेत्—सत्यम् । अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं नोपलभ्यते, अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन ( जै० १।४।४ ) नामधेयत्वात्, तदेतदग्रे वक्ष्यामः, तथापि तस्यो-त्पत्तिविधित्वं स्वीक्रियते, अन्यथा नर्थक्यापत्तेः । दध्ना जुहोती- १०
त्यस्य च नानर्थक्यं गुणविधित्वात् । अतः अग्निहोत्रं जुहोतीत्ययं कर्मोत्पत्तिविधिरिति युक्तम् । ज्योतिष्टोमेनेत्यस्य च नानर्थक्यम-धिकारविधित्वोपपत्तेः । अतः किमर्थं संभवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत्स्वीकार्यम् ।

किंच दध्ना जुहोतीत्यस्य कर्मोत्पत्तिविधित्वे पयसा जुहोतीत्यनेनै- १५
तत्कर्मानुवादेन न पयो विधातुं शक्यते, उत्पत्तिशिष्टदध्यवरोधात्। उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं विधीयते, आकाङ्क्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात् । अतस्तेनापि विशिष्टं कर्मान्तरं विधे-यम् । तथा चानेकादृष्टकल्पनागौरवम् । अग्निहोत्रं जुहोतीत्यस्य तु उत्पत्तिविधित्वे एतद्वाक्यविहितस्य कर्मणो द्रव्याकाङ्क्षायां युग- २०
पदेव खलेकपोतन्यायेन 'दध्ना जुहोति', 'पयसा जुहोति' इत्यादि-वाक्यैर्गुणा विधीयन्त इति नानेकादृष्टकल्पनागौरवम् ।

[4]अतोऽग्निहोत्रं जुहोतीत्ययमुत्पत्तिविधिः, पयसा जुहोतीत्याद-यस्तु गुणविधय इति युक्तम् । सोमेन यजेतेत्यत्र तु रूपवति वाक्ये कर्मोत्पत्तिविधाने स्वीक्रियमाणे न किंचिद्दूषणं, पक्ष- २५
द्वयेऽप्येकस्यादृष्टस्य तुल्यत्वात् । तस्माद्युक्तं सोमेन यजेतेत्यय-

१ °त्वात्क्लेशेन. २ °राधि°. ३ °त्यस्य च गु°. ४ ततो°.

मेवोत्पत्तिविधिरित्यलमनया विधिनिरूपणानुगतप्रपञ्चनिरूपण-[1]
चिन्तया। प्रकृतमनुसरामः। तत्सिद्धं विधिः प्रयोजनवन्तमप्राप्त-
मर्थं विधत्त इति।

स च विधिश्चतुर्विधः—उत्पत्तिविधिर्विनियोगविधिः प्रयोग-
५ विधिरधिकारविधिश्चेति। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्प-
त्तिविधिः। यथाग्निहोत्रं जुहोतीति। उत्पत्तिविधौ च कर्मणः
करणत्वेनैवान्वयः, होमेनेष्टं भावयेदिति। न तु होमं कुर्यादिति
साध्यत्वेन। तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकार-
वाक्यावगतफलसंबन्धो न स्यात्। करणत्वेन[2] त्वन्वये होमेनेष्टं
१० भावयेत्, किं तदिष्टमित्याकाङ्क्षायां फलविशेषसंबन्धो घटते।

न च उत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावये-
दिति कथं वाक्यार्थ इति वाच्यम्। विधिश्रुतेरेवेष्टबोधकत्वात्।
सा हि पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसंबन्धमात्रं बोध-
यति। तस्माद्युक्तमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति। अत
१५ एवोद्भिदा यजेत (ता० ब्रा० १९।७।२) इत्यादौ तृतीयान्त उद्भि-
च्छब्द उपपद्यते, उद्भिदा यागेन इष्टं भावयेदित्यन्वयोपपत्तेः।
येषामपीष्टसाधनत्वं लिङर्थस्तेषामपि तृतीयान्तानां कर्मनामधेया-
नामन्वयोऽनुपपन्न एव। न हि संभवति याग इष्टसाधनमु-
द्भिदेति। तृतीयोपात्तस्य कारकस्य लिङ्गसंख्यान्वयायोग्यस्य क्रिय-
२० यैवान्वयात्।

ननु तवाप्यग्निहोत्रं जुहोतीत्यादिषु कर्मोत्पत्तिविधिषु द्वितीः-
यान्तानां कर्मनामधेयानामन्वयोऽनुपपन्नः। न हि संभवति होमेन
भावयेदग्निहोत्रमिति। सत्यम्। श्रूयमाणा तावद्द्वितीयाऽर्थाक्षिप्त-
साध्यत्वानुवादः, होमस्य हि करणत्वेनान्वयादसाधितस्य च
२५ करणत्वानुपपत्तेः। तस्याश्चान्वयोपस्थितौ सा सक्तून् जुहोती-
तिवत् तृतीयार्थं लक्षयति। अग्निहोत्रेण होमेनेष्टं भावयेदितीत्युक्तं

१ अप्रसक्तविधिनिरूपणानुगत°; विधिनिरूपणागतप्रसङ्गचिन्तया. २ °नान्वये°.

पार्थसारथिमिश्रैः । अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः । तत्सिद्धमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति ।

अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः । यथा दध्ना जुहोतीति । स हि तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति । ५

एतस्य च विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्ग-वाक्यप्रकरणस्थानसमाख्यारूपाणि । एतत्सहकृतेन विधिनाङ्गत्वं परोद्देश[1]प्रवृत्तकृतिव्याप्यत्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते । तत्र निरपेक्षो रवः श्रुतिः । सा च त्रिविधा—विधात्री अभिधात्री विनियोक्त्री चेति । १०

तत्र विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री । सा च त्रिधा—विभक्तिरूपा समाना[2]भिधानरूपा एकपदरूपा चेति । तत्र विभक्तिश्रुत्याङ्गत्वं यथा व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम् । १५

न च उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्वमिति वाच्यम् । पुरोडाशप्रकृतितयोपपत्तेः । पशोरिव हृदयादिरूपहवि-ष्प्रकृतितया यागाङ्गत्वम् । न च साक्षात्पशोरेवाङ्गत्वं किं न स्यादिति वाच्यम्, तस्य विशसनात्, अवदीयमानत्वाच्च हृदयादी-नाम् । अवदीयमानं हि हविः । यथा पुरोडाशादिः । मध्यात्पूर्वा-२० र्धाच्चावद्यतीति वाक्यात् । हृदयादीनि चावदीयमानानि न पशुः, हृदयस्याग्रेऽवद्यति (तै. सं. ६।३।१०।४) इति वाक्यात् । अतो हृदयादीन्येव हवींषि, पशुस्तु प्रकृतिद्रव्यम् ।

पात्नीवतयागे तु साक्षात्पशुरेवाङ्गम् । तस्य जीवत एव 'पर्य-ग्निकृतं पात्नीवतमुत्सृजति' (तै. सं. ६।६।३।१) इत्युत्सर्गविधानात् । २५ यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धम् ।

---

१ °द्देश्य°. २ °एकाभि°.

एवं व्रीहयोऽपि प्रकृतिद्रव्यतया यागाङ्गं तृतीयाश्रुत्येति । आरुण्यस्यापि क्रयाङ्गत्वं तृतीयाश्रुत्या । न चामूर्तस्य तस्य कथं क्रयाङ्गत्वमिति वाच्यम् । एकहायनीरूपद्रव्यपरिच्छेदद्वारा[1] तदुपपत्तेः ।

व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या । तच्च ५ प्रोक्षणं न व्रीहिस्वरूपार्थम्, स्वरूपे आनर्थक्यात्, व्रीहिस्वरूपस्य[2] प्रोक्षणं विनाऽनुपपत्त्यभावात्, किंत्वपूर्वसाधनत्वप्रयुक्तं[3] यदि व्रीहिषु प्रोक्षणं क्रियते तदा तैर्यागे अनुष्ठितेऽपूर्वं भवति नान्यथेति । अतः प्रकरणसहकृतया द्वितीयाश्रुत्या तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनं तदङ्गत्वं प्रोक्षणस्योच्यत इति । एवं सर्वेष्वप्यङ्गेषु अपूर्वप्रयुक्तत्वं १० वेदितव्यम् ।

एवम् 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' (तै० सं० ५।१।२।१) इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम् । यत्तु वाक्यीयोऽयं विनियोग इति तन्न । तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गं[4] भवति तावल्लिङ्गाद्रशना- १५ मात्राङ्गत्वमेव स्यात्, 'स्योनं ते सदनं कृणोमि' (तै० ब्रा० ३।७।५) इत्यस्येव सदनाङ्गत्वम् । श्रौतविनियोगपक्षे तु यावल्लिङ्गाद्रशनामात्राङ्गत्वं संभवति तावच्छ्रुत्या 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' (मै० सं० ३।२।४) इत्यत्र तृतीयाश्रुत्या ऐन्द्र्या ऋचो गार्हपत्योपस्थानाङ्गत्ववदश्वाभिधान्यां विनियोगः क्रियते इति युक्तं मन्त्रस्याश्वाभिधान्य- २० ङ्गत्वम् । तस्माच्छ्रौत एवायं विनियोगः ।

यदाहवनीये जुहोतीत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः ।

पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम् । यजेतेत्याख्याताभिहितसङ्ख्याया भावनाङ्गत्वं समानाभिधान- २५ श्रुतेरेकपदश्रुत्या च यागाङ्गत्वम् ।

न चामूर्तायास्तस्याः कथं यागाङ्गत्वमिति वाच्यम् । कर्तृपरि-

---

१ विशेषणतयेत्यर्थः । २ व्रीहिषु प्रोक्षणं. ३ ०नप्र०. ४ ०ङ्गत्वं संभ०.

च्छेदद्वारा तदुपपत्तेः । कर्ता चाक्षेपलभ्यः । आख्यातेन हि भावनोच्यते । सा च कर्तारं विनाऽनुपपन्ना तमाक्षिपति ।

ननु किमित्येवं वर्ण्यते आक्षेपलभ्यः कर्तेति । आख्यातवाच्य एव किं न स्यात् । आख्यातश्रवणे भावनाया इव कर्तुरपि प्रतिपत्तेः । न च भावनयैवाक्षेपसंभवे किमिति तद्वाचकत्वं कल्पनीयमिति ५ साम्प्रतम् । तथा सति आख्यातवाच्यकर्त्रैव भावनाक्षेपसंभवे तद्वाचकत्वमपि न स्यात् । किं च भावनाया न केवलं कर्त्रैव संबन्धः, कारकान्तरेणापि संबन्धात् । अतः सा न झटिति कर्तारमेवाक्षिपेद्विशेषाभावात् । कर्ता तु भावनयैव संबद्धो न कारकान्तरेण, 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' (जै० सू० ३।१।२२) १० इति न्यायात् । अतः स झटिति तामाक्षिपेदिति स एवाख्यातवाच्यः । भावना तु आक्षेपलभ्यैव किं न स्यात् । किंचैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात्, तेषामपि कर्तृवदाक्षेपलाभसंभवात् ।

किंच यदि कर्ता न वाच्यः स्यात्कथमेकत्वं तेनान्वियात् । १५ न हि शाब्दमशाब्देनान्वेतीति[1] युक्तम् । अन्यथा ऊहादिलोपप्रसङ्गः । किंच देवदत्तः पचतीति सामानाधिकरण्यं न स्यात् । न हि केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते, एकार्थनिष्ठत्वाभावात् । कर्तृवाचकत्वे तूपपद्यत एव ।

लः[2] कर्तरीति व्याकरणस्मृतिविरोधस्तु कर्तुरनभिधेयत्वे स्पष्ट एव । २० किं च कर्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगप्रसङ्गः । तृतीया हि अनभिहितयोः कर्तृकरणयोर्विहिता, आख्यातेन कर्ता[3] नाभिहित इति कर्तृवाचिनी तृतीया स्यादेव । कर्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति, तस्या अनभिहिताधिकारत्वात् । देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव, प्रथमाया अभिहितकारकविभक्ति- २५ त्वात्, प्रातिपदिकार्थमात्रवाचित्वाद्वा ।

न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात्प्रथमावैयर्थ्यम् । लिङ्ग-

१ °न्वेति. २ लः कर्मणीति. ३ °र्तानभि°.

सङ्ख्याप्रतिपत्त्यर्थं तस्या आवश्यकत्वात् । केवलप्रातिपदिकस्य प्रयोगासाधुत्वाच्च । ततश्च यदि कर्ता न वाच्यः स्याद्देवदत्तेन पचतीति प्रयोगः स्यात् । तस्मादाख्यातवाच्यः कर्तेति सिद्ध-मिति पूर्वपक्षसंक्षेपः ।

५ अत्राहुः—स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते, अनन्यलभ्यः शब्दार्थ इति न्यायात् । अत एव न गङ्गापदस्य तीरमर्थः, लक्षणयैव प्रतिपत्तिसंभवात् । अत एव च न वाक्यार्थे शक्तिः । एवं चाख्यातवाच्यभावना कर्तारं विनानुपपन्ना तमा-क्षिपतीत्याक्षेपादेव कर्तुः प्रतिपत्तिसंभवे किमिति तद्वाचकत्वमा-
१० ख्यातस्य कल्पनीयम् ।

न च विनिगमनाविरहः । कृतिमान् हि कर्ता । एवं च कृतेरेव भावनापरपर्यायाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसंभवे न तद्वतः कर्तुर्वाच्यत्वं कल्पनीयम्, गौरवप्रसङ्गात् । न च भावना कारकान्तरेणापि संबद्धा तदुज्झित्वा न झटिति कर्तारमाक्षिपतीति
१५ वाच्यम् । सा हि यथा नियमेन कर्त्रा संबद्धा, न तथा करणादि-कारकान्तरेण, तिष्ठतीत्यादिषु तया तदनाक्षेपात् । अतः प्रथमं सा कर्तारमेवाक्षिपति न कारकान्तरम् । अत एव चाख्याताभिहिता सङ्ख्या न कारकान्तरेण संबध्यते, तस्य प्रथममनुपस्थितेः ।

अत एव तृतीयादिविभक्तीनां करणादिवाचित्वम्, भावना-
२० यास्तैः सह नियतसंबन्धाभावेन तया तेषां नियमेनानाक्षेपात् । आख्यातश्रवणात्प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जा-यमानत्वाच्च । न च शाब्दी सङ्ख्या कथमशाब्देन कर्त्रान्वेतीति वाच्यम् । कर्तुर्लक्षणाङ्गीकारात् । यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति, एवं लक्षितः कर्ता एकत्वेनान्वेष्यति । अत एव
२५ देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते, कर्तुर्लक्षणात् ।

न च मुख्ये संभवति किमिति लाक्षणिकत्वं स्वीकार्यमिति वाच्यम् । अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात् । अन्यथा

१ तस्यावस्य°. २ °कं स्वी°.

सिंहो देवदत्त इत्यपि सामानाधिकरण्यं मुख्यं स्यात् । किंच आख्यातवाच्यः कर्तेति वादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम् । तन्मते आख्यातेन तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात्, शक्तिमद्द्रव्यस्याकृत्यधिकरणन्यायेनानभिधानात, देवदत्तशब्देन च द्रव्यमात्राभिधानात् । अतश्च ५ भिन्नार्थनिष्ठत्वात्तन्मतेऽपि न मुख्यं सामानाधिकरण्यम्, किंतु लाक्षणिकमेवेति न कश्चिद्विशेषः ।

न च लः[1] कर्तरीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्तेति वाच्यम् । न हि वाच्यवाचकभावो व्याकरणस्मृत्यधीनः । तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात् । भवतु वा स्मृतिगम्यः । १० तथापि नेयं स्मृतिः कर्तुराख्यातवाच्यत्वे प्रमाणम्, किंतु कर्तुरेकत्वे एकवचनात्मको लकारः द्वित्वे द्विवचनात्मकः बहुत्वे बहुवचनात्मक इत्यस्मिन्नर्थे प्रमाणम्, द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमित्यनेनास्याः स्मृतेरेकवाक्यत्वात् ।

यत्तूक्तम् कर्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्ग इति १५ तन्न । तृतीया हि कर्तुः प्रतिपत्त्यर्थं तद्गतसंख्याप्रतिपत्त्यर्थं वा । तत्र कर्ता तु भावनाक्षेपादेव लभ्यते इति न तत्र तृतीयापेक्षा । तत्सङ्ख्या तु आख्यातेनैव प्रतीयते इति न तत्राप्यपेक्षा । यथाहुः—

सङ्ख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते ।
उभयं चात्र तत्सिद्धं भावनातिङ्विभक्तितः ॥ २०

(त० वा० ३।४।१३) इति ।

यत्र तु नाख्यातेन तद्गता सङ्ख्योच्यते तत्र भवत्येव तृतीया । यथा देवदत्तेन ओदनः पच्यते इति । तस्मान्न कर्तुरनभिधाने किंचिद्दूषणमित्यलमतिविस्तरेण । प्रकृतमनुसरामः । तत्सिद्धस्त्रिविधः श्रुतिविनियोगः । २५

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम् । लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति, किंतु कल्प्यः । यावच्च तैर्विनि-

---

१ लः कर्मणीति.

योजकः शब्दः कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वा-त्तेषां कल्पकत्वशक्तिर्विहन्यते इति श्रुतेः प्राबल्यम् ।

अत एव 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' (मै० सं० ३।२।४) इत्यत्र यावल्लिङ्गादैन्द्र्या इन्द्रोपस्थानाङ्गत्वं[1] कल्प्यते तावत् प्रत्यक्षया श्रुत्या ५ गार्हपत्योपस्थानाङ्गत्वं क्रियत इति ऐन्द्री[2] गार्हपत्योपस्थानाङ्गम्[3] ।

सामर्थ्यं लिङ्गम् । यदाहुः—

'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते'

(त० वा० १।३।३) इति ।

तेनाङ्गत्वं, यथा 'बर्हिर्देवसदनं दामि' (मै० सं० १।१।३) इत्यस्य १० लवनाङ्गत्वम् । स हि लवनं प्रकाशयितुं समर्थः । तच्च लिङ्गं द्विविधम् । सामान्यसंबन्धबोधकप्रमाणान्तरानपेक्षं तदपेक्षं च । तत्र यदन्तरेण यन्न संभवत्येव तस्य तदङ्गत्वं तदनपेक्षं केवल-लिङ्गादेव । यथाऽर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम् । न हि अर्थज्ञान-मन्तरेणानुष्ठानं संभवति ।

१५ यदन्तरेण यत्संभवति तस्य तदर्थत्वं तदपेक्षम्, यथोक्तस्य मन्त्रस्य लवनाङ्गत्वम् । लवनं हि मन्त्रं विनापि उपायान्तरेण स्मृत्वा कर्तुं शक्यम् । अतो न मन्त्रो लवनस्वरूपार्थः संभवति, किंत्व-पूर्वसाधनीभूतलवनप्रकाशनार्थः । तत्त्वं[4] च न सामर्थ्यमात्रादवग-म्यते, लवनप्रकाशनमात्रे सामर्थ्यात् । अतोऽवश्यं प्रकरणादि २० सामान्यसंबन्धबोधकं स्वीकार्यम् । दर्शपूर्णमासप्रकरणे हि मन्त्रस्य पाठादेवमवगम्यते अनेन मन्त्रेण दर्शपूर्णमासापूर्वसंबन्धि किंचित् प्रकाश्यते इति । अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात् । किं तदपूर्व-संबन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते । तद्धि बर्हिःसंस्कारद्वाराऽपूर्वसंबन्धीति मन्त्रस्य सामर्थ्यात्तदर्थत्वे २५ सति नानर्थक्यं प्रसज्यते । तस्माद्बर्हिर्देवसदनं दामीत्यस्य प्रकरणा-द्दर्शपूर्णमाससंबन्धितयात्रगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम्[5] ।

---

१ °नार्थ°. २ °न्द्र्या. ३ °ङ्गलं. ४ तदङ्गत्वं. ५ युक्तं.

पूषानुमन्त्रणमन्त्राणां तु यागानुमन्त्रणसमाख्यया यागसामान्य-संबन्धेऽवगते सामर्थ्यात्पूषयागसंबन्धोऽवगम्यते ।

ननु तेषां यावत्समाख्यया पूषयागेन सामान्यसंबन्धोऽवगम्यते, तावत् प्रकरणाद्दर्शपूर्णमासाभ्यामेव सामान्यसंबन्धोऽवगतः, समाख्यातस्तस्य बलीयस्त्वात् । अत एव पौरोडाशिकमिति समाख्याते ब्राह्मणे आम्नातानामपि प्रयाजानां प्रकरणात्सान्नाय्योपांशुयागाङ्गत्वमपीत्युक्तम्[1] । किंच यागानुमन्त्रणसमाख्ययापि न पूषयागेन सामान्यसंबन्धोऽवगम्यते किंतु यागमात्रेण, प्रकरणेन तु दर्शपूर्णमासाभ्यामेव विशेषसंबन्धोऽवगम्यते । अतः प्रकरणाज्झटिति तत्संबन्धस्यैवावगतत्वात्तदर्थत्वमेव तेषां युक्तम् । पूषेति शब्दस्य पुष्णातीति व्युत्पत्त्या कथंचिदग्न्याद्यभिधायित्वात् ।

मैवम् । पूषानुमन्त्रणमन्त्रे हि श्रूयमाणे एवमवगम्यते—पूषाभिधानसमर्थत्वादयं मन्त्रस्तत्प्रकाशनार्थ इति लवनमन्त्र इव लवनप्रकाशनार्थः । न तत्र प्रकरणाद्यपेक्षा, येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात् । प्रकरणात्तु दर्शपूर्णमासार्थत्वे तस्य वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकत्वात् लिङ्गस्योपजीव्यत्वेन प्राबल्यम् । अतो लिङ्गात्पूषप्रकाशनार्थत्वेऽवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्वसाधनपूषप्रकाशनार्थत्वं वक्तव्यम् ।

किं तदपूर्वमित्यपेक्षायां यागानुमन्त्रणसमाख्यानुगृहीताल्लिङ्गात्पूषयागापूर्वसंबन्धिदेवताप्रकाशनार्थोऽयमित्यवगम्यते । अतो यद्यपि समाख्यातः प्रकरणं बलीयस्तथाऽपि तस्य लिङ्गेन बाधितत्वात् समाख्याया दुर्बलाया अपि प्रबललिङ्गाश्रितत्वेन प्राबल्यात्सैव सामान्यसंबन्धे प्रमाणं संभवति, दुर्बलस्यापि प्रबलाश्रितस्य प्राबल्यात् ।

अत एव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन[2] प्राबल्यात्पदार्थधर्मगुणभूतश्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते आचमनमेव कार्यमित्युक्तम् ( जै० १।३।७ ) । यथाहुः—

१ °मितीत्यु°. २ °प्रबलार्था°.

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥

(त० वा० ३।३।७) इति ।

यत्तु पूषेति शब्दः कथंचिदग्न्याद्यभिधायीति तन्न । 'तस्मा-
५ द्दन्तको हि स' (तै० सं० २।६।८।५) इत्यादिवाक्यशेषेण वैदिकप्रसिद्ध्या
च अर्थविशेषे रूढत्वात् । रूढेश्चावयवार्थालोचनसव्यपेक्षाद्योगा-
द्बलीयस्त्वात् । अत एव 'वर्षासु रथकारोऽग्नीनादधीत' (बौ० श्रौ०
सू० २।१२।५३।१७) इत्यत्र रथकारशब्देन सौधन्वनापरपर्यायो
वर्णविशेष उच्यते, रूढेः प्राबल्यात्, न तु रथं करोतीति
१० व्युत्पत्त्या द्विजातीयः, योगस्य दौर्बल्यादित्युक्तं षष्ठे (६।१।४४)।

तस्माद्युक्तं समाख्यया सामान्यसंबन्धेऽवगते सामर्थ्यात्पूषयाग-
संबन्धः पूषानुमन्त्रणमन्त्राणामिति । यथाहुः—

यागानुमन्त्रणानीति समाख्या क्रतुयोजिका ।
तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्देवते क्रतौ ॥

१५ (त० वा० ३।२।२) इति ।

तत्सिद्धं प्रमाणान्तरसिद्धसामान्यसंबन्धस्य पदार्थस्य विनियोजकं
लिङ्गमिति ।

तत्र मन्त्रविनियोजकं लिङ्गं मुख्ये एवार्थे विनियोजकं न गौणे ।
मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्रैव विनियोगबुद्धौ पर्यवसन्नायां
२० पुनर्गौणेऽर्थे विनियोगकल्पनायां गौरवप्रसङ्गात् । अत एव 'बर्हिर्देव-
सदनं दामि' (तै० सं० १।१।२) इति मन्त्रः सामर्थ्यात्कुशलवना-
ङ्गम्, तेषां मुख्यत्वात्, न उलपराजिलवनाङ्गमित्युक्तम् ।

तदिदं लिङ्गं वाक्यादिभ्यो बलवत् । तेषां हि न साक्षाद्विनियोज-
कत्वं किंतु लिङ्गं श्रुतिं च कल्पयित्वा । न चासमर्थस्य श्रुतिं
२५ कल्पयित्वा विनियोगकल्पना संभवतीति सामर्थ्यस्यापि कल्प्यत्वेनो-
पजीव्यत्वात् । अतस्तैर्यावत्सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते
तावदेव क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियते इति
तस्य प्राबल्यम् ।

अत एव 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि' (तै० ब्रा० ३।७।५) इत्यस्य सदनाङ्गत्वं लिङ्गात्, नतु वाक्यात्सादनाङ्गत्वम्, तस्य दौर्बल्यादिति ।

समभिव्याहारो वाक्यम् । समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणम् । यथा ५ 'यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति' (तै० सं० ३।५।७।२) इति। अत्र हि न द्वितीयादिविभक्तिः श्रूयते, केवलं पर्णताजुह्वोः समभिव्याहारमात्रम् । तस्मादेव च पर्णताया जुह्वङ्गत्वम् ।

न चानर्थक्यम्, जुहूशब्देनापूर्वलक्षणात् । तदयं वाक्यार्थः— पर्णतया अव्यक्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेदिति । एवं १० च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यते इति न पर्णताया वैयर्थ्यम् । अव्यक्तहविर्धारणद्वारेति चावश्यं वक्तव्यम्, अन्यथा स्रुवादिष्वपि पर्णतापत्तेः । सा चेयं पर्णताऽनारभ्याधीता न सर्वक्रतुषु गच्छति, विकृतिषु चोदकेनापि प्राप्तिसंभवेन द्विरुक्तत्वापत्तेः । किंतु प्रकृतिषु । १५ तदुक्तम्—

'प्रकृतौ वाऽद्विरुक्तत्वात्' (जै० ३।६।४) इति ।

अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्, गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात्, न हि गृहमेधीयात्काचन विकृतिरङ्गानि गृह्णाति मानाभावात्, किंतु चोदकाद्यत्रा- २० ङ्गाप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम् । यथा दर्शपूर्णमासौ । तत्र हि न चोदकादङ्गप्राप्तिः, प्रकरणपठितैरेवाङ्गैर्नैराकाङ्क्ष्यात् । गृहमेधीयादिष्वपि न चोदकादङ्गप्राप्तिः, कॢप्तोपकारैरेव आज्यभागादिभिर्नैराकाङ्क्ष्यात् ।

अतो यत्र चोदकाप्रवृत्तिस्तत्रानारभ्याधीतानां संनिवेशः । २५ साप्तदश्यं त्वनारभ्याधीतमपि न प्रकृतौ गच्छति, प्रकृतेः पाञ्चदश्यावरोधात्। किंतु विकृतिषु गच्छति । तत्रापि न सर्वासु गच्छति,

चोदकप्राप्तपाञ्चदश्यबाधप्रसङ्गात् । किंतु प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिषु गच्छति । यथाहुः—

एवं च प्रकृतावेतत्पाञ्चदश्यं प्रतिष्ठितम् ।
विकृतौ च न यत्रास्ति साप्तदश्यपुनःश्रुतिः ॥
(त० वा० ३।६।९) इति ।

न च वाक्यवैयर्थ्यम् । अनारभ्याधीतस्यैव साप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारात् । उपसंहारो नाम सामान्यप्राप्तस्य विशेषे नियमनम् । यथाहुः—

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।
(त० वा० ३।४।४७) इति ।

तत्रानारभ्यविधिः सामान्यविधिः, मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिरित्यास्तां तावत् । प्रकृतमनुसरामः । तत्सिद्धं वाक्यादङ्गत्वम् ।

तदिदं वाक्यं प्रकरणाद्बलीयः । प्रकरणं हि न साक्षाद्विनियोजकम्, तद्ध्याकाङ्क्षारूपम् । न चाकाङ्क्षा[1] स्वयं प्रमाणं किंतु साकाङ्क्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः—नूनमिदं वाक्यं केनचिद्वाक्येनैकवाक्यभूतमिति । ततश्चाकाङ्क्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम् । एवं च यावत्प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति तावद्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवतीति प्रकरणाद्वाक्यं बलीयः ।

अत एव 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्' (तै० ब्रा० ३।५।१०।३) इत्यत्रेन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे इदं हविरित्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वम्, न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम्, प्रकरणाद्वाक्यस्य बलीयस्त्वादिति ॥

उभयाकाङ्क्षा प्रकरणम् । यथा प्रयाजादिषु । समिधो यजतीत्यत्र हि इष्टविशेषस्यानिर्देशात्समिद्यागेन भावयेत् किमित्यस्त्युप-

---

१ °ङ्क्षात्मरूपं.

कार्याकाङ्क्षा । दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्कथमित्यस्त्युपकारकाकाङ्क्षा । अत उभयाकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सिध्यति ।

ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन स्वर्गः फलं कल्प्यताम् । विश्वजिदधिकरणे (जै० सू० ५ ४।५।७) हि विश्वजिता यजेतेत्यत्र फलस्याश्रवणात्, फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम् । तदुक्तम्—

'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' (जै० सू० ४।३।१५) इति ।

रात्रिसत्रन्यायेन (जै० सू० ४।३।१७) वार्थवादिकं फलं कल्प्यताम् । रात्रिसत्राधिकरणे हि प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यत्र विध्युद्देशे फलाश्रवणात्फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम् । विश्वजिदधिकरणन्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसंबन्धकल्पने गौरवादर्थवादोपस्थितस्यैव प्रकृतफलत्वकल्पने लाघवात् । तदुक्तम्—

'फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्'

(जै० सू० ४।३।१८) इति ।

तस्माद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रफलार्थत्वे संभवति किमिति दर्शपूर्णमासाङ्गत्वं स्वीक्रियते इति ।

मैवम् । स्वतन्त्रफलार्थत्वेऽन्यतराकाङ्क्षया संबन्धः स्यात् । न ह्यत्र फलस्य साधनाकाङ्क्षाऽस्ति । श्रूयमाणं हि फलं साधनमाकाङ्क्षति न चात्र तच्छ्रूयते । एवं च फलस्याकाङ्क्षाभावात् केवलं किं भावयेदिति प्रयाजानां भाव्याकाङ्क्षयैव स्वतन्त्रफलार्थत्वं स्यात् । दर्शपूर्णमासार्थत्वे तूभयाकाङ्क्षा प्रमाणम् । प्रयाजानां भाव्याकाङ्क्षया इतरत्र च कथंभावाकाङ्क्षायाः सत्त्वात् । अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलीयसीति वक्ष्यते । ततश्च दर्शपूर्णमासार्थत्वमेव युक्तं न स्वतन्त्रफलार्थत्वमिति । तदुक्तम्—

'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्'
(जै० सू० ४।३।१) इति ।

अत्र द्रव्ये बलश्रुतिर्यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति (तै० सं० ३।५।७।२) इत्येवमाद्या । संस्कारे फलश्रुतिर्यदङ्क्ते ५चक्षुरेव भ्रातृव्यस्य वृङ्क्ते (तै० सं० ६।१।१।५) इत्येवमाद्या । कर्मणि फलश्रुतिर्वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानूयाजा इज्यन्ते (तै० सं० २।६।१।५) इत्याद्या । कर्मपदं चारादुपकारककर्मपरं द्रष्टव्यम्, संस्कारकर्मणः पृथक्संकीर्तनादित्यास्तां तावत् ।

तदिदं प्रकरणं क्रियाया एव विनियोजकम्, न द्रव्यगुणयोः । १०तयोस्तु क्रियायोगाद्विनियोजकम् । कुत इति चेत्,—शृणु । यजेत स्वर्गकाम इत्यत्राख्यातांशेनार्थीभावनाभिधीयते—भावयेदिति । सा चांशत्रयमपेक्षते—किं भावयेत्केन भावयेत्कथं भावयेदिति । तत्र भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयान्वेति—स्वर्गं भावयेदिति । करणाकाङ्क्षायां समानपदोपात्तो यागो भावार्थाधि- १५करणन्यायेन (जै० सू० २।१।१) करणतयान्वेति—यागेन स्वर्गं भावयेदिति । ततः कथमिति कथंभावाकाङ्क्षायां यत्संनिधौ पठित-मश्रूयमाणफलकं च क्रियाजातं तदेवोपकार्याकाङ्क्षयेतिकर्तव्यता-त्वेनान्वयमनुभवितुं योग्यं, क्रियाया एव लोके कथंभावाकाङ्क्षाया-मन्वयदर्शनात् । न हि कुठारेण छिन्द्यात्कथमित्याकाङ्क्षायां हस्त २०इति केवलमुच्चार्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति । किं तर्हि हस्तेनो-द्यम्य निपात्येति उच्चार्यमाणे उद्यमननिपातने एव । हस्तोऽपि तद्द्वारेणैवान्वयं प्राप्नोतीति सार्वजनीनमेतत् ।

किं च कथंभावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा । थंमोः[1] प्रकारवाचित्वात् । सामान्यस्य भेदको विशेषः प्रकारः । सामान्यं २५च क्रियारूपमेवाख्यातेनोच्यते । यजेत स्वर्गकाम इत्यस्य ह्ययमर्थः— यागेन तथा कर्तव्यं यथा स्वर्गो भवतीति । क्रियासामान्यस्य च विशेषः क्रियैव भवति । न हि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो

१ कथमः प्रकार°.

भवति । एवं च करणगतक्रियाविशेषाकाङ्क्षापरनामधेयकथंभावाकाङ्क्षायां क्रियैवान्वेतीति युक्तम् ।

स च करणगतः क्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तक्रियारूप एवेति युक्तं तस्य प्रकरणेन ग्रहणम् । तस्य च करणगतत्वं तदुपकारकत्वमेव, तेन विना यागेनापूर्वाजननात् । न ह्युद्यमन-५ निपातनव्यतिरेकेण कुठारेण द्वैधीभावो जन्यते । तत्सिद्धं कथंभावाकाङ्क्षायां क्रियैवान्वेतीति । अत एव द्रव्यदेवतयोर्यागसंपादनद्वारान्वयः सांप्रदायिकैरुक्तः ।

विकृतौ च कथंभावाकाङ्क्षायामुपकारसंपादनमतिदिश्यत इत्युक्तम् । यदि च कथंभावाकाङ्क्षायां सिद्धं वस्त्वन्वययोग्यं स्यात् तदा १० संपादनपर्यन्तं धावनं ग्रन्थकृतामनर्थकं स्यात् । अतश्च क्रियाया एव इतिकर्तव्यतात्वम्, कथंभावाकाङ्क्षागृहीतस्येतिकर्तव्यतात्वात्, इतिशब्दस्य च प्रकारवाचित्वात् । 'कर्तव्यस्य' 'इति' प्रकार 'इतिकर्तव्यता' । प्रकारश्च सामान्यस्य भेदको विशेष इत्युक्तम् । कर्तव्यस्य च विशेषः कर्तव्य एव भवतीति न सिद्धस्य वस्तुन इति-१५ कर्तव्यतात्वम्, किंतु क्रियाया एव । सिद्धस्य तु द्रव्यादेः केवलमङ्गत्वम् । तदपि श्रुत्यादिना, न तु प्रकरणात् । यथाहुः—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणद्रव्ये कथं भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥
(त० वा० १।४।३) इति । २०

अत एव बर्हिर्देवसदनं दामीत्यादिमन्त्राणां लिङ्गादङ्गत्वम्, न तु प्रकरणादित्युक्तमर्थवादाधिकरणपूर्वपक्षसमाप्तौ राणके* । क्वचिद्द्रव्यस्येतिकर्तव्यतात्वाभिधानमङ्गत्वाभिप्रायं द्रष्टव्यम् । बहुग्रन्थस्वरसादुक्तयुक्तेश्चेति । तत्सिद्धं प्रकरणं क्रियाया एव विनियोजकमिति । २५

तच्च प्रकरणं द्विविधम्—महाप्रकरणमवान्तरप्रकरणं चेति ।

---

* लिखितपुस्तके 'राणके' इत्यस्य परतो वाक्यसमाप्तिद्योतकं रेखाकरणं कृतम् । मुद्रितपुस्तकयोस्तु ततःप्रागेव 'प्रकरणादित्युक्तम्' इत्यतः परम् । तेनोपष्टम्भकलाक्षेप्यलयोर्व्यत्यासः फलितः । तत्त्वनिर्णयश्चात्र ऋते राणकदर्शनाद्दुष्करः ॥

तत्र फलभावनायाः प्रकरणं महाप्रकरणम् । तच्च प्रयाजादीनां ग्राहकम् । तच्च प्रकृतावेव । यत्र समग्राङ्गोपदेशः सा प्रकृतिः, यथा दर्शपूर्णमासादिः । तत्र चोभयाकाङ्क्षारूपं प्रकरणं संभवति, आकाङ्क्षानुपरमात् ।

५ विकृतौ तु न प्रकरणं संभवति । यत्र न समग्राङ्गोपदेशः सा विकृतिः, यथा सौर्यादिः । तत्र च यान्यपूर्वाण्यङ्गानि पठ्यन्ते उपहोमादीनि तेषां न प्रकरणं विनियोजकम् । तत्र यद्यपि तेषां किं भावयेदित्यस्त्याकाङ्क्षा तथापि प्रधानस्य न कथंभावाकाङ्क्षास्ति, प्राकृतैरेवाङ्गैर्निराकाङ्क्षत्वात् । न च प्राकृतानामङ्गानामत्रापठितत्वे-
१० नाप्रत्यक्षत्वाद्वैकृतानां तु पठितत्वेन प्रत्यक्षत्वात्तैरेवाकाङ्क्षोपशम इति वाच्यम् । तेषां पठितत्वेऽपि अक्लृप्तोपकारत्वेन झटित्याकाङ्क्षोपशमनेऽसामर्थ्यात्, प्राकृतानां तु क्लृप्तोपकारत्वेन तच्छमने सामर्थ्यात् । न चात्र तेषामुपस्थापकाभावः, उपमितिलक्षणप्रमाणेन तेषामुपस्थितत्वात् । सौर्यवाक्ये हि दृष्टे औषधद्रव्यत्वेन एकदैवत्यत्वेन
१५ सादृश्येन आग्नेयवाक्यमुपमीयते गवयदर्शनाद्गोरुपमानवत् । तस्मिंश्चोपमिते तेन तदर्थो ज्ञायते सा त्र्यंशा भावना । तत्र सौर्यवाक्ये भावनाया भाव्यकरणयोः सत्त्वादितिकर्तव्यताकाङ्क्षायामुपकारपृष्ठभावेनाग्नेयेतिकर्तव्यताऽतिदिश्यते,—सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवदुपकृत्येति । तथा च तयैवाकाङ्क्षो-
२० पशमान्न विकृतेः प्रकरणमस्ति । अन्यतराकाङ्क्षारूपस्थानादेव चापूर्वाङ्गग्रहणम् ।

न च प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम् । तेषामपि प्रकृत्युपकारकतयाऽऽकाङ्क्षोपशमात् । ननु प्राकृतानामङ्गानामाकाङ्क्षाऽभावे तेषां विकृतौ संबन्धः केवलं
२५ स्थानात् स्यात्, अपूर्वाणां त्वाकाङ्क्षासत्त्वाद्विकृतेरप्याकाङ्क्षावत्त्वात्तेषां तत्संबन्धः प्रकरणात्स्यात्, प्रकरणं च स्थानात् झटिति विनियोजकमित्यपूर्वाणामेव प्रथमं संबन्धः स्यात्, न प्राकृतानामिति ।

अत्रोच्यते—सत्यं, प्रकरणं झटिति विनियोजकम् । तथापि प्रमाणबलाबलात्प्रमेयबलाबलस्य ज्यायस्त्वादुक्तविधयोपस्थितानां

